राहुग्रस्त दिवाकरेन्दु सदृशी मायासमाच्छा-
दनात्सन्मात्रः
करणोपसंहरणतं योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥६॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नमः इदं श्रीदक्षिणामूर्तये ॥७॥

विश्वं पश्यति कार्य कारणतया स्व स्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मनो भेदतः ।
स्वप्ने जाग्रति वा य एव पुरुषो मायापरिभ्रा-
मितस्तस्मै
श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥

भूरम्भस्यनलो निलाम्बर महर्नाथो हिमांशुः
पुमान्नित्यंभाति
चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्
नान्यत्किंचन् विद्यते विमृशतां यस्मात्परस्माद्विभो
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥

सर्वात्मत्वमितिस्फुटीकृतमिदं यस्मादमुष्मिस्तवे
तेनास्यश्रवणात्तथार्थमननाद्ध्यानाच्च सकीर्तनात् ।
सर्वात्मत्व महाविभूति सहितं स्यादीश्वरत्वं स्वतः
सिद्ध्येत्तत्पुनरष्टधा परिणतञ्चै श्वर्यमव्याहतम् ॥१०॥

वट विटप समीपे भूमि भागे निषण्णं
सकल मुनि जनानां ज्ञान दाता रमरात ।

त्रिभुवनगुरुमोश दक्षिणा मूर्त्तिदेवं
जनम मरण दुःखच्छेददक्षं नमामि ॥११॥

चित्र वटतरोर्मूले वृद्धाः शिष्यगुरुर्युवा।
गुरोस्तुमौनं व्याख्यानं शिष्यास्तु च्छिन्न संशयाः ॥१२॥

ॐ नमः प्रणवार्थात शुद्धज्ञानिकमूर्त्तये।
निर्मलाय प्रशान्ताय दक्षिणामूर्त्तये नमः ॥१३॥

निधये सर्वविद्यानां भिषजे भवरोगिणाम्।
गुरवे सर्वलोकानां दक्षिणामूर्त्तये नमः ॥१४॥

मौनं व्याख्या प्रकटित परब्रह्म तत्त्वं
युवानं वर्षिष्ठान्ते वसदृषिगणैरावृतं ब्रह्मनिष्ठैः।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दरूपं
स्वात्मारामं मुदित वदनं दक्षिणामूर्तिमीडे ॥१५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्कराचार्य विरचितं
दक्षिणामूर्तिस्तोत्रं सम्पूर्णम्।

# श्री दारिद्र्यदहनस्तोत्रम्

विश्वेश्वराय नरकार्णवतारणाय,
कर्णामृताय शशिशेखरधारणाय ।
कर्पूरकान्तिधवलाय जटाधराय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। १ ।।

गौरीप्रियाय रजनीशकलाधराय,
कालान्तकाय भुजगाधिपकंकणाय ।
गंगाधराय गजराजविमर्दनाय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। २ ।।

भक्तिप्रियाय भवरोगभयापहाय,
उग्राय दुर्गभवसागरतारणाय ।
ज्योतिर्मयाय गुणनामसुनृत्यकाय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। ३ ।।

चर्माम्बराय शवभस्मविलेपनाय,
भालेक्षणाय मणिकुण्डलमण्डिताय ।
मंजीरपादयुगलाय जटाधराय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। ४ ।।

पंचाननाय फणिराजविभूषणाय,
हेमांशुकाय भुवनत्रयमण्डिताय ।
आनन्दभूमिवरदाय तमोमयाय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। ५ ।।

भानुप्रियाय भवसागरतारणाय,
कालान्तकाय कमलासनपूजिताय ।
नेत्रत्रयाय शुभलक्षणलक्षिताय,
दारिद्र्यदुःखदहनाय नमः शिवाय ।। ६ ।।

रामप्रियाय रघुनाथवरप्रदाय,
नागप्रियाय नरकार्णवतारणाय।
पुण्येषु पुण्यभरिताय सुरार्चिताय,
दारिद्र्यदुःखदहनाय नमः शिवाय ॥ ७ ॥
मुक्तेश्वराय फलदाय गणेश्वराय,
गीतप्रियाय वृषभेश्वरवाहनाय।
मातंगचर्मवसनाय महेश्वराय,
दारिद्र्यदुःखदहनाय नमः शिवाय ॥ ८ ॥
वसिष्ठेन कृतं स्तोत्रं, सर्वरोगनिवारणं,
सर्वसम्पत्करं नित्यं, पुत्रपौत्रादि वर्द्धनम् ॥ ९ ॥
त्रिसंध्यं यः पठेन्नित्यं, स हि स्वर्गमवाप्नुयात्।
पूजा काले पठेन्नित्यं, लक्ष्मी वसति सर्वदा ॥ १० ॥
इति श्रीमहर्षिवसिष्ठविरचितं दारिद्र्यदहनस्तोत्रं सम्पूर्णम्।

जय देव जगन्नाथ जय शंकर शाश्वत ।
जय सर्वसुराध्यक्ष जय सर्वसुरार्चित ॥१॥
जय सर्वगुणातीत जय सर्व वरप्रद ।
जय नित्यं निराधर जय विश्वभराव्यय॥२॥
जय विश्वैकवन्द्येन जय नागेन्द्रभूषण ।
जय गौरीपते शम्भो जय चन्द्रार्धशेखर॥३॥
जय कोट्यर्क संकाश जयनन्तगुणाश्रय ।
जय भद्र विरूपाक्ष जयचिन्त्यनिरंजन ॥४॥
जय नाथ कृपासिन्धो जय भक्तार्तिभंजन ।
जय दुस्तरसंसार सागरोत्तारण प्रभो ॥५॥
प्रसीद मे महादेव संसारार्तस्य खिद्यतः ।
सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर ॥६॥
महादारिद्रयमग्नस्य महापापहतस्य च ।
महाशोकनिविष्टस्य महारोगातुरस्य च॥७॥
ऋणभारपरीतस्य दह्यमानस्य कर्मभिः ।
ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर ॥८॥
दरिद्रः प्रार्थयेद्देवं प्रदोषे गिरिजापतिम् ।
अर्थाढ्यो वाऽर्थं राजो वा प्रार्थयेद्दे-
वमीश्वरम् ॥९॥
दीर्घमायुःसदारोग्यं कोषवृद्धिर्बलोन्नतिः ।
ममास्तु नित्यमानन्दः प्रसादात्तव शंकर ॥१०॥
शत्रवः संक्षयं यान्तु प्रसीदन्तु मम प्रजाः ।
नायान्तु दस्यवो राष्ट्रे जनाः सन्तु
निरापद ॥११॥
दुर्भिक्षमारिसन्तापाः शमं यान्तु महीतले ।

सर्वसस्यसमृद्धिश्च भूयात्सुखमया दिशः ॥१२॥
एवमाराधयेद्देवं पूजान्ते गिरिजापतिम् ।
ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च
पूजयेत् ॥१३॥
सर्वपापक्षयकरी सर्वरोगनिवारिणी ।
शिवपूजा मयाख्याता सर्वाभीष्टफलप्रदा ॥१४॥

## ॥ हिमालयकृतशिवस्तोत्रम् ॥

### हिमालय उवाच

त्वं ब्रह्मा सृष्टिकर्त्ता च त्वं विष्णुः परिपालकः ।
त्वं शिवः शिवदोऽनन्तः सर्वसंहारकारकः ॥१॥
त्वमीश्वरो गुणातीतो ज्योतिरूपः सनातनः ।
प्राकृतः प्राकृतिशश्च प्राकृतः प्राकृतेः परः ॥२॥
नानारूपविधाता त्वं भक्तानां ध्यानहेतवे ।
येषु रूपेषु यत्प्रीतिस्तत्द्रूपं बिभर्षि च ॥३॥
सूर्यस्त्वं सृष्टिजनकः आधारः सर्वतेजसाम् ।
सोमस्त्वं सस्यपाता च सततं शीतरश्मिना ॥४॥
वायुस्त्वं वारुणस्त्वं च विद्वांश्च विदुषां गुरुः ।
मृत्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः॥५॥
वेदस्त्वं वेदकर्त्ता च वेदवेदांग पारगः ।
विदुषां जनकस्त्वं च विदांश्च विदुषां गुरुः ॥६॥
मन्त्रस्त्वं हि जपस्तवं हि तपस्त्वं तत्फलप्रदः ।
वाक्त्वं गाधिदेवस्त्वं तत्कर्त्ता तद्गुरुः स्वयम्॥७॥
अहो सरस्वतीबीजं कस्त्वां स्तोतुमिहेश्वरः ।
इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्या पदाम्बुजम्॥८॥
तत्रोव स तमाबोध्य चावरुह्य वृषाच्छिवः ।
स्तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नर ॥९॥

मुच्यते सर्वपापेभ्यो भयभयेश्च भवार्णवे।
अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ॥१०॥

भार्याहीनो लभेद्भार्यां सुशीला सुमनोहराम्।
चिरकालगतं वस्तु लभते सहसा ध्रुवम् ॥११॥

राज्यभ्रष्ठो लभेद्राज्यं शंकरस्य प्रसादतः।
कारागरे श्मशाने च शत्रुग्रस्तेऽतिसंकटे ॥१२॥

गम्भीरेऽतिमलांकीर्णे भग्नपोते विषादने।
रणमध्ये महाभीते हिंस्रजन्तु समन्विते।
सर्वतो मुच्यते स्तुत्वा शंकरस्य प्रसादतः ॥१३॥

इति श्री ब्रह्मवैवर्तमहापुराणे श्रीकृष्णजन्मखण्डे
हिमालयकृत श्रीवस्तोत्रं सम्पूर्णम्।

## ॥ शिव स्तुति ॥

चापेयगौरार्द्ध शरीरकायै कर्पूरगौरार्धशरीरकाय।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥१॥

रणत्क्वणत्कंकणनूपुरायै मिलत्फणा भासुरनूपुराय।
हेमांगदाय भुजगांगदाय नमः शिवायै च नमः शिवाय ॥२॥

कस्तूरिकाकुङ्कुमचर्चितायै चितारजः पुञ्जविचर्चिताय।
सुकुण्डलायै फणिकुण्डलाय नमः शिवाय च नमः शिवाय ॥३॥

मन्दारमालाकुलितालकायै कपालमालांकितशेखराय।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥४॥

प्रोत्फुल्लनीलोत्पललोचनायै विकासपंकेरुहलोचनाय।
समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय ॥५॥

अम्भोरुहश्यामलकुन्तलायै तडित्प्रभाभासजटाधराय।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥६॥

सदाशिवानां प्रियाभूषणायै सदाशिवाणां प्रियाभूषणाय।

 शिवान्वितायै च शिवान्विताय नमः शिवायै च नमः शि० ॥७॥
प्रपञ्चसृष्टेर्मुखवासदायै त्रैलोक्यसहारकृतान्तकाय ।
कृतस्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ।।८॥
नमस्ते भगवद्रुद्रभास्करामिततेजसे ।
नमो भवाय देवाय शिवाय परमात्मने ॥९॥
शान्ताय क्षितिरूपाय सदाऽसुरभिदे नमः ।
ईशानाय नमस्तुभ्यं स्पर्शमात्राय ते नमः ॥१०॥
महादेवाय सोमाय अमृतेशाय ते नमः ।
उग्राय यजमानाय नमो मीढुष्टमाय ते ॥११॥
नमोऽस्तुते शंकर शांतिमूर्ते नमोऽस्तुते चंद्रकलावतंस ।
नमोऽस्तुते कारणकारणाय नमोऽस्तुते कारणवर्जिताय ॥१२॥
स एव धन्यस्तव भक्तिभाजां तवार्चनं यः कुरुते सदैव ॥१३॥
मन्त्रहीन क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजित मया देव परिपूर्णं तदस्तु मे ॥१४॥
इति श्री स्कन्दपुराणे शिवस्तुति समाप्तम ।

# ॥ कल्किकृतशिवस्तोत्रम् ॥

गौरीनाथं विश्वनाथ शरण्य,
भूतावासं वासुकीकण्ठभूषम् ।

त्र्यक्षं पञ्चास्यादिदेवं पुराणं,
वन्दे सान्द्रानन्दसन्दोहदक्षम् ॥१॥
योगाधीशं कामनाशं कराल,
गङ्गासङ्गक्लिन्नमूर्धानमीशम् ।
जटाजूटटोपनिक्षिप्तभावं,
महाकालं चन्द्रभालं नमामि ॥२॥

श्मशानस्थं भूतवेतालसङ्गं,
नानाशस्त्रैःखड्गशूलादिभिश्च ।
व्याघ्रात्युग्रा बाहवो लोकनाशे,
यस्य क्रोधोद्भूतलोकऽस्तमेति ॥३॥

यो भूतादिः पञ्चभूतैः, सिसृक्षु
स्तन्मात्रात्माकाल कर्म स्वभावैः ।
प्रहृत्येदं प्राप्य जीवत्वमीशो ब्रह्म-
नन्दे रमन्ते त नयामि ॥४॥

स्थितौ विष्णुःसर्वजिष्णुः सुरात्मा
लोकान् साधून्धर्मसेतून्विभर्षि ।
ब्रह्माद्यंशैर्योऽभिमानो गुणात्मा,
शब्दाद्यङ्गैस्तं परेशं नमामि ॥५॥

यस्याज्ञया वायवो वान्ति लोके,
ज्वलत्यग्निः सविता याति तप्तन् ।
शीतांशुः खे तारकासंग्रहश्च
प्रवर्तन्ते तं परेशं प्रपद्ये ॥६॥

यस्य श्वासात्सर्वधात्री धरित्री
देवो वर्षत्यम्बु कालः प्रमाता ।
-मेरुर्मध्ये भुवनानां च भर्ता
तमीशानं विश्वरूपं नमामि ॥७॥

इति श्री कल्किपुराणे कल्किकृतं शिवस्तोत्रं सम्पूर्णम् ।

## ॥ असितकृतशिवस्तोत्रम् ॥

जगद्गुरो नमस्तुभ्य शिवाय शिवदाय च ।
योगीन्द्राणांयोगीन्द्र गुरूणां गुरूवे नमः ॥ १ ॥
मृत्योर्मृत्युस्वरूपेण मृत्युससारखण्डन ।

मृत्योरीश मृत्युबीज मृत्युञ्जय नमोऽस्तु ते ।। २ ।।
कालरूपं कलयतां कालकालेश कारण ।
कालादतीत कालस्य कालकाल नमोऽस्तु ते ।। ३ ।।
गुणातीत गुणाधार गुणबीज गुणात्मक ।
गुणेश गुणिनां बीज गुणिनां गुरवे नमः ।। ४ ।।
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर ।
ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोऽस्तु ते ।। ५ ।।

इति स्तुत्वा शिवंनत्वा पुरस्तस्थौ मुनीश्वरः ।
दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ।। ६ ।।

असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम् ।
भवेद्धनाढ्योऽदुःखी च मूको भवति पण्डितः ।। ७ ।।

अभार्यो लभते भार्यां सुशीलां च पतिव्रताम् ।
इह लोके सुखंभुक्त्वा यात्यन्ते शिवसन्निधिम् ।। ८ ।।

इदं स्तोत्र पुरा दत्तं ब्रह्मणा च प्रचेतसे ।
प्रचेतसा स्वपुत्रायासिताया दत्तमुत्तमम् ।। ९ ।।

इति श्री ब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
असितकृत शिवस्तोत्रं सम्पूर्णम् ।

## श्री शिव-ताण्डवस्तोत्रम्

जटाकटाहसंभ्रमभ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्धनी ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ।। १ ।।
जटाटवीगलज्जलप्रवाहपावितस्थले
गले वलम्ब्यलम्बितांभुजङ्गतुङ्गमालिकाम्
डमड्डमड्डमड्डमन्निनादवड्डमर्वयं
चकारचण्डताण्डवं तनोतु नः शिवः शिवम् ।। २ ।।

धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर—
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि
क्वचिद्दिगम्बरे मनो विनोदमेतु वस्तुनि ॥ ३ ॥

जटाभुजङ्गपिङ्गलस्फुरत्फणमणिप्रभ
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदान्धसिन्धुरस्फुरत्त्वगुत्तरीयमेदुरे
मनोविनोदमद्भुतं बिभर्तु भूतभर्तरि ॥ ४ ॥

ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा—
निपीतपंचसायकं नमन्निलिम्पनायकम् ।
सुधामयूखलेखया विराजमानशेखरं
महाकपालि सम्पदे शिरोजटालमस्तु नः ॥ ५ ॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर,
प्रसूनधूलिधोरणी विधूसराङ्घ्रिपीठभूः ।
भुजंगराजमालयानिबद्धजाटजूटकः,
श्रियं चिरायजायताञ्चकोरबन्धुशेखरः ॥ ६ ॥

करालभालपट्टिकाधगद्धगद्धगज्वल,
द्धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक,
प्रकल्पनैकशिल्पिनि त्रिलोचनेरतिर्मम ॥ ७ ॥

नवीनमेघमण्डलानिरुद्धदुर्धरस्फुर,
त्कुहूनिशीथिनीतमःप्रबन्धबद्धकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतुकृत्तिसिन्धुरः,
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥ ८ ॥

प्रफुल्लनीलपंकजप्रपञ्चकालिमप्रभा—
वलम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम्,
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिद,

गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥ ९ ॥

अखर्वसर्वमंगलाकलाकदम्बमंजरी,
रसप्रवाहमाधुरीविजृम्भणामधुव्रतम् ।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं,
गजान्तकान्धकान्तकन्तमान्तकान्तकं भजे ॥ १० ॥

जयत्यदभ्रविभ्रमस्फुरद्भुजंगमश्वसद्,
विनिर्गमक्रमस्फुरत्करालभालहव्यवाट् ।
धिमिन्धिमिन्धिमिन्ध्वनन्मृदंगतुङ्गमंगल,
ध्वनिक्रमप्रवर्त्तितप्रचण्डताण्डवः शिवः ॥ ११ ॥

दृषद्विचित्रतल्पयोर्भुजंगमौक्तिकस्रजो,
र्गरिष्ठरत्नलोष्टयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः,
समप्रवृत्तिकः कदा सदाशिव भजाम्यहम् ॥ १२ ॥

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्,
विमुक्तदुर्मतिःसदा शिरःस्थमञ्जलिं वहन् ।
विमुक्तलोललोचनो ललामभाललग्नकः,
शिवेतिमन्त्रमुच्चरन्सदासुखीभवाम्यहम् ॥ १३ ॥

निलिम्पनाथनागरीकदम्बमौलिमल्लिका,
निगुम्फनिर्भरक्षरन्मधूष्णिकामनोहरः ।
तनोतु नो मनोमुद विनोदनोमहर्निशं,
परश्रियः परम्पदन्तदंगजत्विषांचयः ॥ १४ ॥

प्रचण्डवाडवानल प्रभाशुभप्रचारिणी,
महाष्टसिद्धिकामिनीजनावहूतजल्पना ।
विमुक्तवामलोचनाविवाहकालिकध्वनिः,
शिवेतिमन्त्रभूषणजगज्जयायजायताम् ॥ १५ ॥

पूजावसानसमये दशवक्त्रगीतं,

यः शम्भुपूजनमिदं पठति प्रदोषे ।
तस्यस्थिरां रथगजेन्द्रतुरंगयुक्तां,
लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः ॥ १६ ॥

# श्री शिवमहिम्नस्तोत्रम्

पुष्पदन्त उवाच

महिम्नः पारन्ते परमविदुषो यद्यसदृशी,
स्तुतिर्ब्रह्मादीनामपि तदवसन्नस्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधिगृणन्,
ममाप्येषस्तोत्रे हर निरपवादः परिकरः ।
अतीतः पन्थानं तव च महिमा वाङ्मनसयो,
रतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतविधिगुणः कस्य विषयः,
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ।
मधुस्फीता वाचः परममृतं निर्मितवत,
स्तवब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः,
पुनामीत्यर्थेऽस्मिन् पुरमथनबुद्धिर्व्यवसिता ॥
तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्,
त्रयीवस्तुव्यस्तं तृसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन् वरद रमणीयामरमणीं,
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥
किमीहः किङ्कायः स खलु किमुपायस्त्रिभूनम्,
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्येत्वय्यनवसरदुःस्थो हतधियः,
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो,

यतो मन्द्रास्त्वां प्रथमरवर संशेरत इमे ॥
त्रयी साङ्ख्यं योगः पशुपतिमत वैष्णवमिति,
प्रभिन्ने प्रस्थाने पर मिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनाना पथजुषां,
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥
महोक्षः खट्वाङ्गम्परशुरजिन भस्म फणिनः,
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धि दधति तु भवद्भ्रूप्रणिहितां,
नहि स्वात्मारामं विषय मृगतृष्णा भ्रमयति ॥
ध्रुवं कश्चित् सर्वं सकलमपररतवध्रुवमिदं,
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन्पुरमथम तैर्विस्मित इव,
स्तुवञ्जिह्वेमि त्वां न खलु ननुधृष्ट मुखरता ॥
तवैश्वय यत्नाद्यदुपरिविरञ्चिर्हरिरधः,
परिच्छेत्तु यातावनलमनिलस्कन्धवपुषः ।
ततोभक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्,
स्वयंतस्थे ताभ्यां तव किमनुवृत्तिर्नफलात ।
अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं,
दशास्यो यद्बाहूनमृत रणकण्डूपरवशान् ।
शिरःपद्मश्रेणी रचितचरणाम्भोरुहवलेः,
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥
अमुष्य त्वत्सेवा समाधिगतसारं भुजवनं,
बालात्कैलासेऽपि त्वदधिवसतौविक्रमयतः ।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि,
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितोमुह्यति खलः ॥
यदृद्धि सुत्राम्णो वरद ! परमोच्चैरपि सती,
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः ।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयोः,
न कस्याप्युन्नत्यै भवतिशिरसस्त्वय्यवनतिः ॥

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा,
विधेयस्याऽऽसीद्यस्त्रिनयन विषं संहृतवतः।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो,
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः॥
असिद्धार्था नैव क्वचिदपि सदेवासुरनरे,
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्,
स्मरःस्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः॥
मही पादाघाताद्व्रजति सहसा संशयपदम्,
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा,
जगद्रक्षायै त्वं नटसि ननु वामैवविभुता॥
वियद्व्यापीतारागणगुणितफेनोद्गम रुचिः,
प्रवाहो वारां यः पृषतलघुदृष्ठः शिरसि ते।
जगद् द्वीपाकारं जलधिप्रलयं तेन कृतमित्य-
नेनैवोन्नेयं धृतमहिमदिव्यं तव वपुः॥
रथः क्षोणी यन्ता शतधृतिनगेन्द्रो धनुरथो,
रथाङ्गेचन्द्रार्कौ रथचरणपाणिः शर इति।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि,
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः॥
हरिस्ते साहस्रं कमलबलिमाधाय पदयो,
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम्।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा,
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम्॥
क्रत सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमताम्,
क्व कर्म प्रध्वस्तं फलतिपुरुषाराधनमृते।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं,
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः॥
क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृताम्,

ऋषीणामार्त्विघ्यं शरणद सदस्याः सुरगणाः।
क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो,
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः॥
प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरम्,
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा॥
धनुपाणेर्यातं दिवमपि सपत्राकृतममुम्,
त्रसन्तन्तेऽद्यापि त्यजति न मृगव्याधपभसः॥
स्वलावण्याशंसा धृतधनुषमह्नायतृणवत्,
पुरः प्लुष्टं दृष्ट्वापुरमथन पुष्पायुधमपि।
यदिस्त्रैणं देवी यमनिरतदेहार्धघटनाद्,
अवैतित्वामद्धा बत वरद मुग्धा युवतयः॥
श्मशानेष्वाक्रीडास्मरहर पिशाचाः सहचरा,
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः।
अमंगल्यं शीलं तव भवतु नामैवमखिलम्,
तथापि स्मर्तृणां वरद परमं मंगलमसि॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः,
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादंह्रद इव निमज्यामृतमये,
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किलभवान्।
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वंहुतवह,
स्त्वमापस्त्वं व्योमत्वमुधरणिरात्मात्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतुगिरम्,
न विद्मस्तत्तत्त्वंवयमिह तु यत्त्व न भवसि॥
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपिसुरा,
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः,
समस्तं व्यस्तं त्वां शरणद् गृणात्योमिति पदम्॥
भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महां,
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम॥

अमुष्मिन्प्रत्येक प्रविचरति देव: श्रुतिरपि,
प्रियायास्मै धाम्नेप्रणिहितनमस्योऽस्मि भवते ।
नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो,
नम: क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो,
नम: सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥
वहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः,
प्रवलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौमृडाय नमो नमः,
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥
कृशपरिणतिचेत क्लेशवश्यं क्व चेदं,
क्व च तव गुणसीमोल्लङ्घिनीशश्वदृद्धि ।
इति चकितममन्दीकृत्य मां भक्तिराधा,
द्वरदचरणयोस्ते वाक्यपुष्पोपहारम् ॥
असितगिरिसमं स्यात् कज्जल सिन्धुपात्रे,
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकाल,
तदपि तव गुणनामीशपार न याति ॥
असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौले,
ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकलगुणवरिष्ठः पुष्पदन्ताभिधानो,
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥
अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्,
पठति परमभक्त्या शुद्धचित्तः पुमान्यः ।
स भवति शिवलोके रुद्रतुल्यस्तथात्र,
प्रचुरतरधनायुः पुत्रमानकीर्तिमांश्च ॥
महेशान्नापरो देवो महिम्नो नापरा स्तुतिः,
अघोरान्नापरोमन्त्रो नास्ति तत्त्वगुरोः परम ।

दीक्षा दान तपस्तीर्थंज्ञानंयागादिकाः क्रियाः,
महिम्नस्तवपाठस्य कलांनार्हन्तिषोडशीम् ।।

कुसुमदशननामा सर्वगन्धर्वराजः,
शशिधरधरवरमौलेर्देवदेवस्य दासः ।
स खलु निजमहिम्नो भ्रष्ट एवास्यरोषात्,
स्तपनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ।।

सुरवरमुनिपूज्य स्वर्गमोक्षैकहेतुं,
पठति यदि मनुष्यः प्रञ्जलिर्नान्यचेताः ।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः,
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ।।

श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन,
स्तोत्रेण किल्विषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन,
सुप्रीणितो भवति भूतपतिर्महेशः ।।

आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम्
अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ।
तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर
यादृशोऽसि महादेव तादृशाय नमो नमः ।
एककालं द्विकालं वा त्रिकालं यः पठेन्नरः ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन देवेशप्रीयतां मे सदाशिव ।।

इति श्रीपुष्पदन्तविरचितं शिवमहिम्नस्तोत्रं सम्पूर्णम् ।

# ॥ शिवाष्टोत्तरशतनाम स्तोत्रम् ॥

शिवो महेश्वरः शम्भुः पिनाकी शशि शेखरः ॥
वामदेवो विरूपाक्षः कपर्दी नील लोहितः ॥ १ ॥

शंकरः शूलपाणिश्च खट्वांगी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥२॥

भवः सर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः ।
उग्रः कपाली कामारिरंधकासुरसूदनः ॥ ३ ॥

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥ ४ ॥

कैलासवासी कवची कठोर स्त्रिपुरांतकः ।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥ ५ ॥

सामप्रियः स्वरमयस्त्रयोमूर्तिरनीश्वरः ।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥ ६ ॥

हविर्यज्ञमयः सोमः पंचवक्त्र, सदाशिवः ।
विश्वेश्वरो वीरभद्रो प्राणनाथः प्रजापतिः ॥ ७ ॥

हिरण्यरेता दुऽर्धर्षो गिरीशो गिरीशोऽनघः ।
भुजङ्गभूषणों भर्गो गिरिधन्वा गिरीप्रियः ॥ ८ ॥

कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः ।
मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥ ९ ॥

व्योमकेशी महासेनः जनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बर ॥ १० ॥

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खंडपरशू रजः पाशविमोचनः ॥ ११ ॥

मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥ १२ ॥

भगनेत्रभिदव्यक्तः सहस्त्राक्षः सहस्रपात् ।
अपवर्ग प्रदोऽनन्तस्तारकः परमेश्वरः ॥ १३ ॥

एवमष्टोत्तरशतं नाम नामाम्नाय सम्मितम् ।
शंकरस्य प्रिय गौरी जपत्वा त्रैलोक्यमन्वहम् ॥ १४ ॥

प्रेरिता पद्मनाभेन वर्षमेकं प्रयत्नतः ।
आवाप सा शरीरार्धं प्रसादाच्छूलपाणिनः ॥ १५ ॥

यस्त्रिसन्ध्यं पठेच्छम्भो नाम्नामष्टोत्तरं शतम् ।
शतरुद्रत्रयावृत्या चैकावृत्या पठेन्नरः ॥ १६ ॥

_इति श्री शिवाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।

# श्री शिवापराधक्षमापनस्तोत्रम्

आदौ कर्मप्रसंगात् कलयति कलुषं मातृकुक्षौ स्थितं माँ,
विण्मूडमूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ।
यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुम्,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेवशम्भो ॥ १ ॥

बाल्ये दुःखातिरेकोमललुलितवपुः स्तन्यपाने पिपासा,
नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ।
नानारोगादिदुःखाद्रुदनपरवशः शंकरं न स्मरामि,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेवशम्भो ॥ २ ॥

प्रौढोऽहं यौवनस्थो विषयविषधरैः पंचभिर्मर्मसन्धौ,
दष्टो नष्टो विवेकः सुतधनयुवतिस्वादसौख्ये निषण्णः ।
शैवीचिन्ताविहीनं मम हृदयमहो मानगर्वाधिरूढं,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ॥ ३ ॥

वार्द्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदैवाधितप्तैः,
पापैर्रोगैर्वियोगैस्त्वनवसितवपुः प्रौढिहीनं च दीनम्।
मिथ्या मोहभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यम्,
क्षंतव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। ४ ।।

नो शक्यं स्मार्तकर्म प्रतिपदगहनंप्रत्यवायाकुलाख्याम्,
श्रौते वार्ता कथं मे द्विजकुल विहते ब्रह्ममार्गे सुसारे।
नास्था धर्मे विचारः श्रवणमननयोः किं निदिध्यासितव्यम्,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। ५ ।।

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृत गांगतोयम्,
पूजार्थं वा कदाचिद्बहुतरगहनात्खण्डबिल्वीदलानि।
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पे त्वदर्थम्,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। ६ ।।

दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितं नैव लिंगम्,
नो लिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। ७ ।।
ध्यात्वा चित्ते शिवाख्य प्रचुरतरधनं नैव दत्त द्विजेभ्ये,
हव्यं ते लक्षसंख्यैर्हुतवहवदने नार्पितं बीजमन्त्रैः।
नो तप्तं गंगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः,
क्षन्तव्यो मेऽपराध. शिव शिव शिव भो श्रीमहादेव शम्भो ।। ८ ।।

स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुण्डले सूक्ष्ममार्गे,
शन्ते स्वान्ते प्रलीने प्रकटितविभवे ज्योतिरूपे पराख्ये।
लिंगज्ञे ब्रह्मवाक्ये सकलतनुगतं शंकर न स्मरामि,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। ९ ।।

रग्नो निःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारी,
नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ।
उन्मन्यावस्थाया त्वां विगतकलिमलं शंकर न स्मरामि,
क्षन्तव्योमेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ।। १० ।।

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे ।
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।।
दन्तित्वक्कृतसुन्दराम्बधरे त्रैलोक्यसारे हरे ।
मोक्षार्थं कुरु चित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ।। ११ ।।

किं वाऽनेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किम् ।
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।।
ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं मनो दूरतः ।
स्वात्मार्थं गुरुवाक्यतो भज भज श्री पार्वतीवल्लभम् ।। १२ ।।

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनम् ।
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।।
लक्ष्मीस्तोयतरंगभङ्गचपला विद्युच्चलं जीवितम् ।
तस्मान्मां शरणागतं शरणद स्त्वं रक्ष रक्षाधुना ।। १३ ।।

करचरणकृतं वाक्कायजं कर्मजं वा ।
श्रवणनयनजं वा मानसं वापराधम् ।।
विहितमविहितं वा सर्वमेतत्क्षमस्व ।
जय जय करुणाब्धे श्री महादेव शम्भो ।। १४ ।।

इति श्रीमच्छङ्कराचार्यविरचितं शिवापराधक्षमापनस्तोत्रं सम्पूर्णम् ।

## ।। पुष्पांजलि एवं क्षमा-प्रार्थना ।।

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।। ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्यानः सन्ति देवाः ।। ॐ राजाधिराजाय प्रसह्य साहिने। नमो वयं वैश्वणाय कुर्महे ।। स मे कामान् कामकामाय मह्यम् कामेश्वरो वैश्वणो ददातु । कुबेराय वेश्वरणाय महाराजाय नमः ।।

सेवन्तिका बकुल चम्पकपाटलाब्जैः
पुन्नागजातिकर वीर रसाल पुष्पैः ।

विल्व प्रवालगजकेसर मालतीभि-
स्त्वां पूजयामि जगदीश्वर मे प्रसीद ।।

आवाहनं न जानामि न जानामि तवार्चनम्।
पूजां चैव न जानामि क्षमस्व परमेश्वर ।।
अन्यथा शरणं नास्ति त्वमेव शरणं मम।
तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर ।।

गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ।
आगता सुखसम्पत्तिः पुण्याच्च तव दर्शनात् ।।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।।
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ।।

इसके बाद नीचे लिखे वाक्य से मृत्तिका चूर्ण करे—

सद्योजातं प्रपद्यामि सद्योजाताय वैं नमः ।
भवे भवे नाति भवेभवस्वमां भवोद्भवाय
नमो नमः ।
ॐ ह्रौं ह्रीं जूं सः महेश्वराय नमः ॥

मृत्तिका को भली-भांति स्वच्छ कर नीचे लिखे मन्त्र से जल छोड़े—

ततो वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमो बलविकरणाय नमः बलविकरणाय नमो बलाय नमः बलप्रमथनाय नमः सर्वभूतदमनाय नमः मनोन्मनाय नमः ॥

नीचे लिखे हुए दोनों मन्त्रों मे संयोजन और पिण्डी बनावे ।

अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्य सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ इति संयोजनम् ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ इति पिण्डीकरणम् ॥

नीचे लिखे मंत्र को पढ़कर सुन्दर शिवलिंग बनावे—

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ॥ ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माशिवोमे अस्तु सदाशिवोम् ॥

शिवलिङ्ग बनाकर बाएं हाथ वेदी, तांबे के पात्र अथवा विल्व-पत्र पर अक्षत पुष्पयुंक्त शिवलिङ्ग को नीचे लिखे मन्त्र से स्थापन करे—

ॐ ह्रौं ह्रीं जूं सः शूलपाणये नमः ॥

# पार्थिव-शिव-पूजन

पार्थिव-शिव-पूजन के लिए उपासक को चाहिए कि प्रातःकाल उठकर आवश्यक क्रियाओं से निवृत्त होकर पवित्र वस्त्र धारण करके उत्तर दिशा में मृत्तिका लाने के लिए जाय। सूर्य को अर्घ्य देकर नीचे लिखे मन्त्र से भूमि की प्रार्थना करे—

ॐ सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम् ।
ग्रहिष्यामि प्रसन्ना त्वं लिंगार्थं भव सुप्रभे ॥
ॐ ह्रां पृथिव्यै नमः ॥

फिर नीचे लिखे मन्त्र से मृत्तिका ग्रहण करे—

ॐ उद्धृतासि वराहेण कृष्णेन शताबाहुना ।
मृत्तिके त्वां प्रगृह्णामि प्रजया च धनेन च ॥
मंत्रः ॐ ह्रौं ह्रीं जूं सः हराय नमः ।

मौन धारण किये चुपचाप मृत्तिका लाकर शुद्ध भूमि में रखे और नीचे लिखा श्लोक पढ़े, जल छिड़ककर उत्तर मुख आसन बिछावे ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासन् ॥

हाथ में तिल, यव ले नीचे लिखे श्लोक को पढ़ता हुआ। अपनी रक्षा के लिए चारों ओर विघ्नकर्त्ताओं के नाश के लिए छोड़े ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्न कर्तारस्ते नश्यन्तु शिवाज्ञया ॥

शिवलिंग स्थापन करके यह संकल्प पढ़े—

ॐ विष्णुर्विष्णुर्विष्णुरित्यादि देशकालादिकं स्मृत्वा अमुकगोत्रोऽमुकशर्माहं शुभपुण्यफलप्राप्तिकामनया शिवप्रीतये शिवपार्थिवपूजनमहं करिष्ये ।। ॐ ह्रौं ह्रीं जूं सः पिनाकपाणये नमः ।।

नीचे लिखे मंत्र से आवाहन करे—

कैलासशिखराद्रस्यात्समागच्छ मम प्रभो ।
पूजां जपं गृहीत्वा च यथोक्तफलादो भव ।।
देवदेवं महादेवं सर्वलोकहितेरत् ।
यथोक्तरूपिणं देवं शंभुमावाहयाम्यहम् ।।
ॐ सदाशिव इह स्थितो भव ।।

आवाहन के बाद प्राणप्रतिष्ठा के लिए हाथ में जल लेकर नीचे लिखे मन्त्र से विनियोग करे—

ॐ अस्य श्रीप्राणप्रतिष्टामन्त्रस्य ब्रह्माविष्णुरुद्रः ऋषयः ऋग्यजुःसामानि छन्दांसि प्राणाख्यदेवता ॐ बीजम् ह्रीं शक्तिः क्रौं कीलकं पार्थिवलिग-प्रतिष्टापने विनियोगः ।।

फिर हाथ में अक्षत लेकर नीचे लिखे मन्त्र से प्राण प्रतिष्ठा करे—

ॐ आं ह्रीं क्रा य र ल व श ष ह हसः शिवस्यप्राणाः शिवस्यजीवाः शिवस्य सर्वेन्द्रियाणि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा शिवइहागच्छेहतिष्ट मम पूजां गृहाण :।

हाथ में पुष्प लेकर नीचे लिखे श्लोक से प्रार्थना करे—

स्वस्मिन्शर्व जगन्नाथयावत्पूजां करोम्यहम् ।
तावत्त्वं प्रीतिभावेन लिंगेस्मिन् संस्थितिं कुरु ।।

प्रार्थना के बाद हाथ में फूल अक्षत लेकर ध्यान करे—

ध्यायेन्नित्यं महेशं रजतगिरि—निभं
चाँरुचन्द्रावतंसम्
रत्नाकल्पोज्वलाँगं परशुमृग—वराभीतिहस्तं
प्रसन्नं ।।
पद्मासीनं समंतात्स्तुतम—
ममरगणेर्व्यालयज्ञोपवीतम् ।
विश्वाद्यं विश्वद्यं निखिल भयहरं
पंचवक्त्रं त्रिनेत्रं ।।

फिर नीचे लिखे प्रकार से पूजा करे—

ॐ शिवाय नमः । इति पाद्यम् ।।
महेश्वराय नमः । इत्यर्घ्यम् ।।
ॐ शंभवे नमः । इत्याचमनीयम् ।।

नीचे लिखे मन्त्र से पञ्चामृत स्नान करावे—

पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।
शर्करा च समायुक्तं स्नानार्थं प्रति गृह्यताम् ।।

नीचे लिखे मन्त्र से जल स्नान करावे—

ॐ नमः शंभवाय च मयोभवाय च नमः शिवाय च
शिवतराय च ।।

फिर नीचे लिखे मन्त्र पढ़कर वस्त्र, यज्ञोपवीतादि चढ़ावे—

ॐ ज्येष्ठाय नमः वस्त्रं समर्पयामि ।। ॐ रुद्राय नमः यज्ञोपवीतं समर्पयामी । ॐ कपर्द्दिने नमः पुनराचमनीयं समर्पयामि ।। ॐ कालाय नमः गन्धं समर्पयामि । ॐ फल-

विकरणाय नमः अक्षतान् समर्पयामि ।। ॐ बलविकरणाय नमः विल्वपत्रधतूरादि पुष्पाणि समर्पयामि । ॐ बलाय नमः धूपमघ्रापयामि ।। बलप्रमथनाय नमः दीपं दर्शयामि । ॐ नीलकण्ठाय नमः नैवेद्यं निवेदयामि । ॐ भवाय नमः ऋतुफलानि समर्पयामि । ॐ मनोन्मनाय नमः आचमनं समर्पयामि ।। ॐ शम्भवे नमः ताम्बूलं समर्पयामि । ॐ त्रिलोकेशाय नमः अभिषेकं करोमि । ॐ शितिकंठाय नमः नीराजनम् । ॐ शिवाप्रियाय नमः दक्षिणाम् । ॐ शम्भवे नमः ।। इति नमस्करोमि ।।

हाथ में अक्षत-पुष्प लेकर नीचे लिखे मन्त्र से पुष्पांजलि अर्पण करे—

हर विश्वाखिलाधर निराधर निराश्रय।
पुष्पाँजलिमिमाँ शंभो गृहाण वरदो भव ।।
ॐ पार्थिवेश्वराय नमः पुष्पाँजलि समर्पयामि ।।

प्रार्थना

रूपं देहि जयं देहि भाग्यं देहि महेश्वर ।।
पुत्रान् देहि धनं देहि सर्वांकामांश्च देहि मे।।

फिर यथावकाश निम्नलिखित मूल मन्त्र का जाप करे—

ॐ नमः शिवाय ।। अथवा ।। 'ॐ ह्रौं ह्रीं जूं सः शिवाय नमः प्रसन्नपारिजाताय स्वाहा ।।

इस मूलमन्त्र का ११०८ या इससे अधिक जप करे। नीचे लिखे श्लोक से जप समर्पण करे—

ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर।

ॐ शर्वाय क्षितिमूर्त्तये नमः पूर्वस्याम् ॐ भवाय जलमूर्त्तं नमः ।। ईशान्याम् ।।

ॐ रुद्राय तेजोमूर्त्तये नमः उत्तरास्याम् ।। ॐ उग्राय वायुमूर्त्तये नमः वायव्याँ ।। ॐ भीमाय आकाश मूर्त्तये नमः ।। पश्चिमायाँ ।। ॐ पशुपतये यजमानमूर्त्तये नमः नैऋत्याम् ।। ॐ महादेवाय सोममूर्त्तये नयः दक्षिणस्याम् ।। ईशानाय सूर्यमूर्त्तये नमः आग्नेयाम् ।। इत्यष्टमूर्त्तिपूजा ।।

निम्नलिखित श्लोकों से शिवलिंग की प्रार्थना करे—

नमः ओंकाररूपाय वेदरूपाय ते नमः।
अलिङ्गलिङ्गरूपाय विश्वरूपाय ते नमः ।। १ ।।

नमो मोक्षपदे तुभ्यं नमो नादात्मने तथा।
नमः शब्दस्वरूपाय रूपातीताय ते नमः ।। २ ।।

त्वं त्राता सर्वलोकानाँ त्वमेव च जगत्पिता।
त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियरूपधृक् ।। ३ ।।

त्वं गुरुस्त्वं गति साक्षात् त्वं देवः पितामहः।
नमस्ते भगवन् रुद्र भास्करामिततेजसे ।। ४ ।।

संसारसागरे मग्नं मामुद्धर शिवाव्यय।
अनेन पूजनेन त्वं वाँछितार्थं प्रदो भव ।। ५ ।।

दण्डवत्प्रणतो भूत्वा स्तुत्वा चैव विशेषतः।
एकाग्रः प्रणतो भूत्वा मन्त्रमेतदुदीरयेत ।। ६ ।।

अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर ।
पूजितोऽसि महादेव तत्क्षमस्वाम्बिकापते ॥ ७ ॥
अन्यथासक्तचितेन क्रियाहीनेन वा विभो ।
मनोवक्कायदुष्टेन पूजितोसि त्रिलोचन ॥ ८ ॥
तत्सर्वंक्षम्यतां देव दासे कृत्वा दयां मयि ।

नीचे लिखे हुए मन्त्र से अभिषेक करे—

ॐ देवस्यत्वसवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम् अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिचामि ।

अभिषेक के वाद तिलक करके प्रदक्षिणा करे—

वृषचंडं वृषंश्चैवसोमसूत्रं पुनर्वृषम् ।
चण्डश्च सोमसूत्रश्चपुनश्चण्डं पुनर्वृषम् ॥
यानि कानि च पापानि दुःखानि च महेश्वर ॥
तानि तानि विनश्यन्ति प्रदक्षिणे पदे पदे ॥

इसके वाद निम्नलिखित श्लोक से क्षमा प्रार्थना करे—

मंत्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ॥
यत्पूजितां मया देव परिपूर्णं तदस्तु मे ॥
आवाहनं न जानामि न जानामि विसर्जनम् ॥
पूजनं नैव जानामि तत्क्षमस्व महेश्वर ॥

अब अक्षत-पुष्प हाथ में लेकर शिवलिङ्ग का विसर्जन करे—

हरो महेश्वरश्चैव शूलपाणि पिनाक धृक् ।
शिवः पशुपतिश्चैव महादेवेति विसर्जनम् ॥

ईशान सर्वविद्यानामोंकारो भुवनेश्वरः ।
कैलाशे गच्छ देवेश पुनरागमनाय च ॥

अक्षत पुष्प शिवलिङ्ग पर चढ़ा दे ।

अनेन पार्थिवेश्वर पूजनेन श्री सदाशिव प्रीयताम् न मम ।



## पूजन-सामग्री

चन्दन, केसर, रोली, कपूर, धूप, कलावा, घी, रूई, दीपक, चावल, तिल, पुष्प, पुष्पमाला, भस्म, रुद्राक्षमाला, कुशा, दूर्वा, बिल्व-पत्र, यज्ञोपवीत, वस्त्र, ध्वजा, मिष्ठान, दूध, दही, मधु, गंगाजल,

शर्करा, सर्वोषधि, तुलसीदल, फल, पान, लौंग, सुपारी, गुलाल पंचमेवा, सुगन्धित तेल-इत्यादि ।

पुष्पाञ्जलि मन्त्र

अज्ञानाद्यदि वा ज्ञानाद्यद्यत्पूजादिकं मया ।
कृतं तदस्तु सफलं कृपया तव शंकर ॥
तावकस्त्वन्दतप्राणस्त्वच्चित्तोऽहं सदा मृड ।
इति विज्ञाय गौरीश भूतनाथ प्रसीद मे ॥

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं प्रभो ॥

# महामृत्युञ्जयजपविधिः

तत्र सन्ध्योपासनादिनित्यकर्मानन्तरं भूतशुद्धिं प्राणप्रतिष्ठां च कृत्वा प्रतिज्ञासंकल्पं कुर्यात् । ॐ तत्सदद्येत्यादि सर्वमुच्चार्य मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोऽमुकशर्मा मम शरीरे ज्वरादिरोगनिवृत्तिपूर्वकमायुरारोग्यलाभार्थं वा धनपुत्रयशःसौख्यादिकामनासिद्ध्यर्थं श्रीमहामृत्युञ्जयदेवप्रीतिकामनया यथासंख्यापरिमितं महामृत्युञ्जयजपमहं करिष्ये। अस्य श्रीमहामृत्युञ्जयमन्त्रस्य वसिष्ठ ऋषिः, अनुष्टुप्छन्दः, श्री त्र्यम्बकरुद्रो देवता, श्री बीजम्, ह्रीं शक्तिः, मम अभीष्टसिद्ध्यर्थे जपे विनियोगः । ॐ वसिष्ठऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । श्रीत्र्यम्बकरुद्रदेवतायै नमो हृदि । श्री बीजाय नमो गुह्ये । ह्रीं शक्तये नमः पादयोः ॥ इति ऋष्यादिन्यासः ॥

अथ करन्यासः । ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः त्र्यम्बकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा अंगुष्ठाभ्यां नमः। ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः यजामहे ॐ नमो भगवते रुद्राय अमृतमूर्तये मां जीवय तर्जनीभ्यां नमः । ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः सुगन्धिम्पुष्टिवर्द्धनम् ॐ नमो भगवते रुद्राय चन्द्रशिरसे जटिने स्वाहा मध्यमाभ्यां वषट् । ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय ह्रां ह्रीं अनामिकाभ्यां हुम् । ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः मृत्युर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुःसाममन्त्राय कनिष्ठिकाभ्यां वौषट् । ॐ ह्रौं ॐ जूंस भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय अग्नित्रयाय

ज्वल ज्वल मा रक्ष रक्ष अघोरास्त्राय करतलकरपृष्ठाभ्यां फट ।। इति करन्यास ।।

## अंगन्यासः

ॐ ह्रौं ॐ जूंस ॐ भूर्भुवः स्वः त्र्यम्बकं ॐ नमो भगवते: रुद्राय शूलपाणये स्वाहा हृदयाय नमः । ॐ ह्रौं ॐ जूंस भूर्भुव स्वः यजामहे ॐ नमो भगवते रुद्राय अमृतमूर्तये मां जीवय शिरसे स्वाहा । ॐ ह्रौं ॐ जूंसः भूर्भुव स्वः सुगन्धिस्पुष्टिवर्द्धनम् ॐ नमो भगव्ते रुद्राय चन्द्रशिरसे जटिने स्वाहा शिखायै वषट् । ॐ ह्रौं ॐ जूंस भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय ह्रां ह्रां कवचाय हुम् । ह्रौं ॐ जूंसः भूर्भुवः स्वा मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुः-साममन्त्रत्रयाय वौषट् ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय अग्नित्रयाय ज्वल ज्वल मां रक्ष रक्ष अघोरास्त्राय फट् ।। इत्यङ्गन्यासः ।।

## अक्षरन्यासः

त्र्यं नमः दक्षिणचरणाग्रे । बं नमः, कं नमः, यं नमः, जां नमः दक्षिणचरणसन्धिचतुष्केषु । मं नमः वामचरणाग्रे । हें नमः, सु नमः, गं नमः, धिं नमः, वामचरणसन्धिचतुष्केषु । पुं नमः, गुह्ये । ष्टिं नमः, आधारे । वं नमः जठरे । द्धं नमः, हृदये । नं नमः, कण्ठे : उं नमः, दक्षिण काराग्रे । वां नमः, रुं नमः, कं नमः, मिं नमः, दक्षिणकरसण्धिचतुष्केषु । वं नमः बामकराग्रे । बं नमः. धं नमः, नां नमः, मृं नमः,

वामकक्ष-संधिचतुष्केषु । त्र्यों नमः, वदने । मुं नमः, ओष्ठयोः । क्षीं नमः घ्राणयोः । यं नमः दृशोः । मां नमः, श्रवणयोः । मृं नमः, भ्रुवोः । तां नमः, शिरसि ।। इत्यक्षरन्यासः ।।

## पदन्यासः

त्र्यम्बकं शिरसि । यजामहे भ्रुवोः । सुगन्धिं दृशोः । पुष्टिवर्धनं मुखे । उर्वारुकं कण्ठे । मिव हृदये । बंधनात् उदरे । मृत्यो गुह्ये । मुक्षीय ऊर्वोः । मां जान्वोः । अमृतात् पादयोः ।। इति पदन्यासः ।।

## मृत्युंजयध्यानम्

हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं शिरो
द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहंतं परम् ।
अंकन्यस्तकरद्वयामृतघटं कैलाशकान्तं शिवं
स्वच्छाम्भोजगतं नवेन्दुमुकुटाभातं त्रिनेत्रं भजे ।। १ ।।
मृत्युञ्जय महादेव त्राहि मां शरणागतम् ।
जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ।। २ ।।
तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड ।
इति विज्ञाप्य देवेशं जपेन्मृत्युंजयं मनुम् ।। ३ ।।

### बृहन्मन्त्रः

ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः—त्र्यम्बकं यजामाहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।। भूर्भुवः स्वरों सः जूं ह्रौं ॐ ।। १ ।।

एतद् यथासंख्यं जपित्वा पुनर्न्यासं कृत्वा जपं भगन्महामृत्युंजयदेवतायै समर्पयेत् ।

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥ १ ॥

वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशांकवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शंकरम् ॥ २ ॥

शान्तं पद्मासनस्थं शशिधरमुकुटं पंचवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षिणांगे वहन्तम् ।
नागं पाशं च घंटां डमरुकसहितं सांकुशं वामभागे
नानालंकारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥ ३ ॥

रुद्रो नर उमा नारी तस्मै तस्यै नमो नमः ।
रुद्रो ब्रह्मा उमा वाणी तस्मै तस्यै नमो नमः ॥
रुद्रो विष्णुरुमा लक्ष्मी तस्मै तस्यै नमो नमः ।
रुद्रः सूर्य उमा छाया तस्मै तस्यै नमो नमः ॥
रुद्रः सोम उमा तारा तस्मै तस्यै नमो नमः ।
रुद्रो दिवा उमा रात्रि तस्मै तस्यै नमो नमः ॥
रुद्रो यज्ञ उमा वेदितस्मै तस्यै नमो नमः ।
रुद्रो वह्निरुमा स्वाहा तस्मै तस्यै नमो नमः ॥
रुद्रो वृक्ष उमा वल्ली तस्मै तस्यै नमो नमः ।
रुद्रः पुष्पमुमा गन्धतस्मै तस्यै नमो नमः ॥
रुद्रो वेद उमा शास्त्रं तस्मै तस्यै नमो नमः ।
रुद्रोऽर्थं अक्षरा सोमा तस्मै तस्यै नमो नमः ॥
रुद्रो लिङ्गमुमा पीठं तस्मै तस्यै नमो नमः ।

# शिवार्चन में अहिंसा की प्रधानता

लिङ्गपुराण में शिवार्चन के समय अहिंसा को प्रधानता देते हुए नीचे लिखे अनुसार कहा गया है—

"शिवार्चन के लिए सदैव वस्त्र में छने हुए जल को प्रयोग में लाना चाहिए। जल में सूक्ष्म जन्तुओं का निवास रहता है। अतः उनकी हिंसा होने की आशंका रहती है, इसी कारण शिवार्चन के लिए फेन रहित नदी का जल पवित्र माना गया है।

किसी वेद के पारगङ्गत विद्वान को त्रैलोक्य का दान करने से जो फल प्राप्त होता है, उससे भी कोटि गुना अधिक फल अहिंसा-धर्म का पालन करने से होता है। जीवों पर दया दिखाने वाले लोग ही रुद्र-लोक को प्राप्त होते हैं।

शिवजी के पूजन-अर्चन में केवल पुष्पों की हिंसा ही करनी चाहिए। किसी अन्य प्राणी की हिंसा करना वर्जित है। समस्त त्रैलोक्य के हनन करने का जो बुरा फल कहा गया है, वही फल शिवालय में अथवा शिवजी की पूजा के निमित्त किसी एक प्राणी की हिंसा करने पर हिंसक व्यक्ति को प्राप्त होता है।

